इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासा-
त्मज खेमराजश्रेष्ठिना स्वकीये
" श्रीवेङ्कटेश्वर " मुद्रायन्त्रा-
लयेऽङ्कितम् । संवत् १९५१
शके १८१६

जाहि-

रात.

वेदान्त डिण्डिम:

श्रीगणेशायनमः ॥ वेदांतडिंडिमास्त
त्वमेकमुद्घोषयंति यत् ॥ आस्तां पुर
स्तात्तत्तेजो दक्षिणामूर्तिसंज्ञितम् ॥१॥
आत्मानात्मा पदार्थौ द्वौ भोक्तृभोग्य
त्वलक्षणौ ॥ ब्रह्मैवात्मा न देहादीरिति
वेदांतडिंडिमः ॥ २ ॥ ज्ञानाज्ञाने पदा
र्थौ द्वावात्मनो बंधमुक्तिदौ ॥ ज्ञाना
न्मुक्तिर्निबंधोऽन्यादिति वेदांतडिंडि

म: ॥ ३ ॥ ज्ञातृज्ञेय पदार्थौ द्वौ भास्य
भासकलक्षणौ ॥ ज्ञाता ब्रह्म जगज्ज्ञेय
मिति० ॥ ४ ॥ सुखदुःखे पदार्थौ द्वौ प्रि
यविप्रियकारकौ ॥ सुखं ब्रह्म जगद्दुःख
मिति० ॥ ५ ॥ समष्टिव्यष्टिरूपौ द्वौ
पदार्थौ सर्वसंमतौ ॥ समष्टिरीश्वरो
व्यष्टिर्जीवो वेदांतडिंडिमः ॥ ६ ॥ ज्ञा
नकर्मपदार्थौ द्वौ वस्तुकर्त्रात्मतंत्र

कौ ॥ ज्ञानान्मोक्षो न कर्मभ्य इति वे० ॥ ७ ॥ श्रोतव्याश्राव्यरूपौ द्वौ पदार्थौ सुखदुःखदौ॥श्रोतव्यं ब्रह्म नैवा न्यादिति वे० ॥८॥ चिंत्याचिंत्यपदार्थौ द्वौ विश्रांतिश्रांतिदायकौ ॥ चिंत्यं ब्र ह्म परं नान्यादिति वे० ॥ ९ ॥ ध्येया ध्येये पदार्थौ द्वौ धीसमाध्यसमाधि दौ ॥ ध्यातव्यं ब्रह्म नैवान्यादिति

वे० ॥ १० ॥ योगिनो भोगिनो वापि त्यागिनो रागिणोऽपि च ॥ ज्ञानान्मोक्षो न संदेह इतिवे० ॥ ११ ॥ न वर्णाश्रमसंकेतैर्न कर्मोपासनादिभिः ॥ ब्रह्मज्ञानं विना मोक्ष इति वे० ॥ १२ ॥ असत्यः सर्वसंसारो रसाभासादि दूषितः ॥ उपेक्ष्यो ब्रह्म विज्ञेयमिति वे० ॥ १३ ॥ वृथाक्रियां वृथालापान्

वृथावादान्मनोरथान्॥त्यक्त्वैकं ब्रह्म
विज्ञेयमिति वे० ॥ १४ ॥ स्थितो ब्रह्मा
त्मना जीवो ब्रह्म जीवात्मना स्थित
म् ॥ इति संपश्यतां मुक्तिरिति वे
दां० ॥ १५ ॥ जीवो ब्रह्मात्मनाज्ञेयो
ज्ञेयं जीवात्मना परम् ॥ मुक्तिस्तदै
त्यविज्ञानमिति वे० ॥ १६ ॥ सर्वा
त्मना परं ब्रह्म श्रोतुरात्मतया स्थित

म् ॥ नायासस्तत्वविज्ञताविति
वे० ॥ १७ ॥ ऐहिकंचामुष्मिकं च
तापांतं कर्मसंचयम् ॥ त्यक्त्वा ब्रह्मैव
विज्ञेयमिति वे० ॥ १८ ॥ अद्वैतद्वैत
वादौ द्वौ सूक्ष्मस्थूलदृशां गतौ ॥ अ
द्वैतवादान्मोक्षः स्यादिति वे० ॥ १९ ॥
कर्मिणो विनिवर्तंते निवर्तंते उपास
काः ॥ ज्ञानिनो न निवर्तंत इति

वे० ॥ २० ॥ परोक्षासत्फलं कर्म ज्ञा
नं प्रत्यक्षसत्फलम् ॥ ज्ञानमेवाभ्यसे
त्तस्मादिति वे० ॥ २१ ॥ वृथाश्रमोऽयं
विदुषां वृथाऽयं कर्मिणां श्रमः॥ यदि न
ब्रह्मविज्ञानमिति वे० ॥ २२ ॥ अलं
यागैरलं योगैरलं भुक्तैरलंधनैः ॥ पर
स्मिन्ब्रह्मणि ज्ञात इति वेदां० ॥ २३ ॥
अलं वेदैरलंशास्त्रैरलं स्मृतिपुराणकैः ॥

परमात्मनि विज्ञात इति वे० ॥ २४ ॥
नर्चा न यजुषार्थोऽस्ति न साम्नार्थो
ऽस्ति कश्चन ॥ जातेब्रह्मात्मविज्ञानइ
ति वे० ॥ २५ ॥ कर्माणिचित्त शुद्ध्यर्थ
मैकाग्र्यार्थमुपासना ॥ मोक्षार्थं ब्रह्मवि
ज्ञानमिति वे० ॥ २६ ॥ संचितागामि
कर्माणिदह्यंते ज्ञानवह्निना ॥ प्रारब्धा
नुभवान्मोक्ष इति वे० ॥ २७ ॥ नपु

ण्यकर्मणा वृद्धिर्न हानिः पापकर्मणा॥
नित्यासंगात्मनिष्ठानामिति वे०।२८॥
बुद्धिपूर्वाबुद्धिपूर्वकृतानां पापकर्मणा
म् ॥ प्रायश्चित्तमहोज्ञानमिति वे०२९॥
दृग्दृश्यौ तौ पदार्थौ द्वौ परस्परविल
क्षणौ ॥ दृग्ब्रह्मदृश्यं माया स्यादिति वे
दा० ॥ ३० ॥ अविद्योपाधिको जीवो
मायोपाधिक ईश्वरः ॥ मायाविद्यागु

णातीत इति वे० ॥ ३१ ॥ साकारं च
निराकारं निर्गुणं चागुणात्मकम् ॥ तत्त्वं
तत्परमं ब्रह्म इति वे० ॥ ३२ ॥ द्विज
त्वं विध्यनुष्ठानाद्विप्रत्वं वेदपाठतः ॥
ब्राह्मण्यं ब्रह्मविज्ञानादिति वे० ॥ ३३ ॥
सर्वात्मना स्थितं ब्रह्म सर्वं ब्रह्मात्मना
स्थितम् ॥ न कार्यं कारणाद्भिन्नमिति
वेदांत० ॥ ३४ ॥ सत्तास्फुरणसौख्या

नि भासंते सर्ववस्तुषु ॥ तस्माद्ब्रह्ममयं सर्वमिति वे० ॥ ३५ ॥ अवस्थात्रितयं यस्य क्रीडाभूमितया स्थितम् ॥ तदेव ब्रह्म जानीयादिति वे० ॥ ३६ ॥ यन्ना दौ यच्च नास्त्यंते तन्मध्ये भातमप्य सत् ॥ अतो मिथ्याजगत्सर्वमिति वे० ॥ ३७ ॥ यदस्त्यादौ यदस्त्यंते यन्मध्ये भाति तत्स्वयम् ॥ ब्रह्मैवैकमि

दंसत्यमिति वे० ॥ ३८ ॥ पुरुषार्थत्रया
विष्टाः पुरुषाः पशवोध्रुवम् ॥ मोक्षार्थी
पुरुषः श्रेष्ठ इति वेदांत०॥ ३९ ॥ घटकु
ड्याद्किं सर्वं मृत्तिकामात्रमेवच ॥ त
थाब्रह्मजगत्सर्वमिति वेदां० ॥ ४० ॥ ष
ण्निहत्यत्रयंहित्वाद्वयं भित्त्वाखिलाति
गम्॥एकं बुद्ध्वाश्नुते मोक्षमितिवे०४१॥
भित्त्वा षट्पंचभित्त्वाथभित्त्वाथचतुर

त्रिकम् ॥ द्वयं हित्वाश्रयेदेकमिति वे०
॥ ४२ ॥ देहो नाहमहं देही देहसाक्षी
ति निश्चयात् ॥ जन्ममृत्युप्रहीणोऽसा
विति वे० ॥ ४३ ॥ प्राणो नाहमहं देवः
प्राणसाक्षीति निश्चयात् ॥ क्षुत्पिपासो
पशांतिः स्यादिति वे० ॥ ४४ ॥ मनो
नाहमहं देवो मनःसाक्षीति निश्चयात्॥
शोकमोहापहानिः स्यादिति वे०॥४५॥

बुद्धिर्नाहमहं देवो बुद्धिसाक्षीति निश्च
यात् ॥ कर्तृभावनिवृत्तिः स्यादिति वे०
॥ ४६ ॥ नाज्ञानं स्यामहं देवोज्ञानसा
क्षीति निश्चयात् ॥ सर्वानर्थनिवृत्तिः
स्यादिति वे० ॥ ४७ ॥ अहं साक्षीति
यो विद्याद्विविच्यैवं पुनःपुनः ॥ स एव
मुक्तोसौ विद्वानिति वे० ॥४८॥ नाहंमा
या न तत्कार्यं न साक्षीपरमोऽस्म्यहम्

इति निःसंशयज्ञानान्मुक्तिर्वे० ॥ ४९ ॥
नाहं सर्वमहंसर्वममसर्वमिति स्फुटम् ॥
ज्ञाते तत्त्वे कुतो दुःखमिति वे० ॥ ५० ॥
देहादिपंचकोशस्था या सत्ता प्रतिभा
सते ॥ सा सत्तात्मा न संदेह इति वे०
॥ ५१ ॥ देहादिपंचकोशस्था या स्फूर्ति
रनुभूयते ॥ सा स्फूर्तिरात्मा नैवान्यदि
ति वे० ॥ ५२ ॥ देहादिपंचकोशस्था या

प्रीतिरनुभूयते ॥ सा प्रीतिरात्मा कूट
स्थ इति वेदां० ॥ ५३ ॥ व्योमादिपंच
भूतस्था या सत्ता भासते नृणाम् ॥सा
सत्ता परमं ब्रह्म इति वे० ॥ ५४॥व्यो
मादिपंच भूतस्था या च्चिदेकानुभूय
ते॥ सा च्चिदेव परं ब्रह्म इति वे०॥ ५५॥
व्योमादिपंचभूतस्था या प्रीतिरनुभूय
ते ॥ सा प्रीतिरेव ब्रह्म स्यादिति वे०

॥ ५६ ॥ देहादिकोशगा सत्ता या सा
व्योमादिभूतगा ॥ मानाभावान्न तद्भेद
इति वे० ॥ ५७ ॥ सच्चिदानंदरूपत्वा
द्ब्रह्मैवात्मा न संशयः ॥ प्रमाणकोटि
संधानादिति वे० ॥ ५८ ॥ न नामरूपे
नियते सर्वत्र व्यभिचारतः ॥ अनाम
रूपंसर्वं स्यादिति वे० ॥ ५९ ॥ नजीव
ब्रह्मणोर्भेदः स्फूर्तिरूपेण विद्यते ॥ स्फू

तिरूपेण मानं स्यादिति वे० ॥ ६० ॥
न जीवब्रह्मणोर्भेदः प्रियरूपेण विद्यते॥
प्रियभेदेन मानं स्यादिति वे० ॥ ६१ ॥
न जीवब्रह्मणोर्भेदो नाम्ना रूपेण विद्य
ते ॥ नाम्नो रूपस्य मिथ्यात्वादिति
वेदां० ॥ ६२ ॥ न जीवब्रह्मणोर्भेदः पिंड
ब्रह्मांडभेदतः ॥ व्यष्टेःसमष्टेरेकत्वादि
ति वे० ॥ ६३ ॥ ब्रह्म सत्यं जगन्मिथ्या

जीवो ब्रह्मैव नापरः ॥ जीवन्मुक्तस्तु तद्विद्वानिति वे० ॥ ६४ ॥ अनामरूपं सकलं सन्मयं चिन्मयं परम् ॥ कुतो भेदः कुतो बंध इति वे० ॥ ६५ ॥ न तत्त्वात्कथ्यते लोको नामाद्यैर्व्यभिचारतः॥ बटुः कुलट इत्याद्यै रिति वे० ६६॥ नामरूपात्मकं विश्वमिंद्रजालं विदुर्बुधाः ॥ अनामत्वादयुक्तत्वादिति वे०

वे०

१०

॥ ६७ ॥ अभेददर्शनं मोक्षःसंसारो भेद
दर्शनः ॥ सर्ववेदांतसिद्धांत इति वे०
॥ ६८ ॥ न मताभिनिवेशित्वान्न भाषा
वेशमात्रतः॥ मुक्तिर्विनात्मविज्ञानादि
ति वे० ॥ ६९ ॥ नकाम्यप्रतिषिद्धाभिः
क्रियाभिर्मोक्षवासना।ईश्वरानुग्रहात्सा
स्यादिति वे॥७० ॥ अविज्ञातेजन्म नष्टं
विज्ञातेजन्मसार्थकम्॥ज्ञातुरात्मान दू

दिं०

१०

रेस्यादितिवे० ॥ ७१ ॥ दशमस्यपरिज्ञा
नेनायासोऽस्ति यथा तथा ॥ स्वस्य ब्रह्मा
त्मविज्ञान इति वेदां० ॥ ७२ ॥ उपे
क्ष्यौपाधिकान्दोषान्गृह्णंते विषया
यथा ॥ उपेक्ष्य दृश्यं यद्ब्रह्म इति वेदांत०
॥ ७३ ॥ सुखमल्पं बहुक्लेशोविषयग्रा
हिणांनृणाम् ॥ अनंतं ब्रह्मनिष्ठाना
मिति वे० ॥ ७४ ॥ धनैर्वा धनदैः पुत्रैर्दा

रागारसहोदरैः ॥ ध्रुवं प्राणहरैर्दुःखमि
ति वे० ॥ ७५ ॥ सुप्तेरुत्थाय सुप्त्यं
तं ब्रह्मैकं प्रविचिंत्यताम् ॥ नातिदूरे
नृणां मृत्युरिति वेदां० ॥ ७६ ॥ पंचा
नामपि कोशानां मायानर्थव्ययोचि
ता ॥ तत्साक्षी ब्रह्मविज्ञानोमिति
वे० ॥ ७७ ॥दशमत्त्वपरिज्ञाने नवज्ञ
स्य यथासुखम् ॥ तथा जीवस्यसंप्रा

क्षितिरिति वे० ॥ ७८॥ नवभ्योऽस्तिपरं
प्रत्यङ्नव वेद परं परम् ॥ तद्विज्ञानाद्ध
वेत्तुर्या मुक्तिर्वेदां० ॥ ७९ ॥ नवाभासा
नवज्ञत्त्वान्नवोपाधीन्नवात्मना ॥ मि
थ्याज्ञात्वावशिष्टे तु मौनं वे० ॥ ८० ॥
परमे ब्रह्मणि स्वस्मिन्प्रविलाप्याखिलं
जगत् ॥ गायन्नद्वैतमात्मानमास्ते
वे० ॥ ८१ ॥ प्रतिलोमानुलोमाभ्यां

वे०

१२

विश्वारोपापवादयोः ॥ चिंतने शिष्यते
तत्त्वमिति वे० ॥ ८२ ॥ नामरूपाभि
मानः स्यात्संसारः सर्वदेहिनाम् ॥ स
च्चिदानंददृष्टिः स्यादिति० ॥ ८३ ॥ स
च्चिदानंदसत्यत्वे मिथ्यात्वे नामरू
पयोः॥ विज्ञाते किमिदं ज्ञेयमितिवे० ८४
सालंबनं निरालंबं सर्वालंबावलंबितम् ॥
आलंबनाखिलालंबमिति वेदां० ८५ ॥

इं०

१२